ஸம்ஸ்க்ருதஸ்ரீ:

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका

**SAMSKṚTAŚRI**

**ஸம்ஸ்க்ருதஸ்ரீ**



A Fortnightly Bulletin of the Samskrit Education Society, Madras.




Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00

9, Single Mall Street, Tiruchirapalli-620 002.

माला—5 पुष्पम्—1



१

श्रीगुरुभ्यो नमः

# ।। संस्कृतश्रीः ।।

वार्षिकसुमम्

कलि 5083 दुर्मति–तुला-6 (5-1) 22—10—81

## पञ्चमे निदधे पदम्

जगद्गुरूणां श्रीकाञ्चीकामकोटिपीठाधीश्वराणां परममनुग्रहं अवलंब्यअस्खलता पदेन चरन्ती इयं संस्कृतश्रीः पञ्चमे वयसि पदं निदधती लक्ष्यमुपनीयमाना जागर्ति । पञ्चमं वयो नितरां बहुप्रशस्तानुभवप्रदम् । गुरुकृपया प्रशस्ताननुभवान् एषा प्राप्स्यतीति विश्वसिमः । स्वावलंबेन चलितु प्रवृत्तिरिदानीमुदियात् । तिरश्चीनया अनुभूतो लोकः इदानीं उत्तानया साक्षात्क्रियेत । संस्कृतभाषायाः गृहे गृहे अध्ययनं यथा सुकरं, तथा प्रवर्तत इयम् । आंग्लद्वारा संस्कृतां गिरं बोद्धुं केचित् समीहन्त इति तानुपकर्तुं इदानीं प्रवर्त्यते । इयता तमिलभाषामाध्यमिकता प्रवृत्तमध्यापनमनुवर्तते, गद्यपद्यात्मकसाहित्यपरिचयरूपेण । प्रतीक्षामहेऽत्र सहयोगं बहूनां तत्राधिकृतानाम् । अनुभूयते—संस्कृतभाषाया अध्ययने रतिं प्रकटयन्तो न मृग्यन्ते, परं अध्यापने रतिं प्रकटयन्त एव मृग्यन्ते । तत्र प्रभवन्तोऽपि ते सहजेनाकृत्रिमेण श्रद्धाजाड्येन प्रभाव्यन्ते, यतः बोधनसामग्रीसंकलनै, तासां सविभजने च न यथापेक्षितं उत्सुका वर्तन्ते । कविः पुराणोऽनुशासिता यः, स एवात्र मार्गं दर्शयन् अध्यापकानामौत्सुक्यवर्धनेन, नः उपकुर्यात् ।

# संस्कृतम् — संगीतम्

वि. गो. अनन्तसुब्रह्मण्यः, तिरुप्पति

संस्कृतं चाथ संगीत संस्कृतश्रीकुचद्वयम् ।
एकं भाषासु मधुरं अन्यत् लोकानुरंजकम् ।।

संस्कृतश्रियः अंगद्वयरूपेण संस्कृतं–संगीतं प्रतिपाद्यते । संस्कृतस्य–सगीतस्य च कः सम्बन्धः इति । संस्कृतमेतत् भाषासु मधुरं, संगीतमेतत् चतुष्षष्टिकलासु एका कला जनरंजकं च । अपि च संगीतमेतत् प्रयोगयोग्यम् । तस्य लक्षणान्यपि वर्तन्ते । लक्षण-ग्रन्थाः सर्वे संस्कृतभाषायामेव वर्तन्ते । अपि च संगीते यानि यानि सांकेतिकपदानि भवन्ति तानि सर्वाणि संस्कृतभाषायामेव विद्यन्ते । अतः संस्कृतस्य संगीतस्य च सम्बन्धः अनिर्वर्णनीयः, सुदृढश्च ।

संगीतमिति प्रत्येकतया नास्ति । किन्तु गीतमेतत् गानं इत्यर्थे विलसति । गानं, गीतं द्वयमपि एकमेव । शारीरकसम्पत्या गायति चेत् तस्य गीतं, गानम् इति । संगीतमित्युक्ते सं इति उपसर्गस्य सम्मेलनमिति अर्थः । केषां सम्मेलनं, वाद्यादिसम्मेलन-मिति । गीतशब्दस्य व्युत्पत्तिः गै शब्दे इति धातोः क्तप्रत्यये गीतमिति । संस्कृतनाटके - नटेन उच्यते -: "आर्ये सुष्ठु गीतं त्वया" इति । अत्र नट्यैव गीतम् ।

संगीतमित्युक्ते तौर्यत्रिकानां सम्मेलनमित्यर्थः । गीतवाद्यनृ-त्यसमूह एव तौर्यत्रिकम् । अत एव संगीतमित्युक्ते तौर्यत्रिक-सम्मेलनमेव । केचन गीतमपि संगीतमिति वदन्ति । अवयवे अवयव्युपचारात् । खण्डपटे पटव्यवहारवत् ।

संस्कृतमित्युक्ते व्याकरणशास्त्रपरिष्कृतभाषा इत्यर्थः । अत्र सम् - उपसर्गस्य परिष्कृतमित्यर्थः । यथा संस्कृतभाषाज्ञानेन

आध्यात्मिक – आधिभौतिक–आधिदैविक–ज्ञानं प्राप्तुं शक्यते तथैव संगीतज्ञानेन चतुर्विधः पुरुषार्थः प्राप्तुं शक्यः । संगीतरत्नाकरे– "धर्मार्थकाममोक्षाणामिदमेवैकसाधनम्" (1-30) इति उच्यते । संगीतस्य धर्मसाधनत्वं कथमिति चेत् अश्वमेधप्रकरणे-:" ब्राह्मणौ वीणागाथिनौ गायतः ......ब्राह्मणो अन्यो गायेत्" इति श्रुतिः । (तै. ब्रा. 3-9-14-1) देवार्चनादिषु गीतादेस्तदंगत्वेन परिग्रहाच्च । यथा सुप्रभेदागमे -: "देवस्याग्रे विशेषेण नृत्तं कुर्यात्सगेयकम्" इति । अर्थसाधनत्वम् लोकतो दृश्यते । कामसाधनत्वं :- "तस्माद्गायन्तं स्त्रियः कामयन्ते" इति वेदतो लोकतश्च सिद्धम् । मोक्षसानधत्वम्:- "वीणावादनतत्वज्ञः श्रुतिजातिविशारदः । तालज्ञश्चाप्रयासेन मोक्षमार्गं स गच्छति ।। " इति याज्ञवल्क्यस्मृतिः । नाट्यशास्त्रे- "सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रवर्तकम् । नाट्याख्यं पंचमं वेदं सेतिहासं करोमि च ।।" इति । संगीतशास्त्रस्य वेदसाम्यम् अनेन प्रतिपाद्यते । अत्र संगीतस्य लक्षणं वक्तुं प्रवर्तमानः महर्षिः नाट्यशास्त्रस्य लक्षणं प्रतिपादयति । कुत इति चेत् तस्य समाधानं संग्रहचूडामणौ दत्तं गोविन्ददीक्षितेन :- "नृत्यं गीतं च वाद्यं च दृश्यं काव्यं मनोहरम् । संगीतं प्रोच्यते तज्ज्ञैः संगीतं सामवेदजम् ।। इति अस्य श्लोकस्य उदाहरणम् मालविकाग्निमित्रे– 'मालविकाग्निमित्रं नाम नाटकम् अस्मिन् वसन्तोत्सवे प्रयोक्तव्यमिति तदारभ्यतां "संगीतम्" इति । अत्र संगीतमित्युक्ते नाटकारम्भे तौर्यत्रिकसम्मिलितस्यैव ग्रहणम् । (अनुवर्तते)

---

**தீபாவளி புண்யகாலத்தில் நமது வாசகர்களுக்கு ஸம்ஸ்க்ருதஸ்ரீயின் நல் வாழ்த்துக்கள்**

குறிப்பு : சென்ற 7-10-81 இதழில் ஸரஸ்வதீ பூஜையை உத்தேசித்துப் பாடங்கள் சேர்க்கப்படவில்லை. தீபாவளி நெருக்கடியில் பத்திரிகை அச்சிடப்படும் அச்சகத்தில் ஏற்பட்டுள்ள தாமதத்தால் குறைந்த பக்கங்களுடன் மலர் வெளியாகின்றது எனத் தாழ்மையுடன் தெரிவிக்கின்றோம்—ஆசிரியர்

# ॥ युगपदन्तिकवर्ति विदूरगम् ॥

शे. श्रीनिवास शर्मा

ब्रह्म :– यदतिलोकमहो बृहिधातुजं
सुविदुषां ननु सन्निहितं स्वयम् ।
अविदुषां न तथा ह्यतिसूक्ष्मतः
युगपदन्तिकवर्ति विदूरगम् ॥

पुष्पसौरभम् :– प्रभवधामनि साधु निषेवितं
मृदुलवातरथोपरि वाहितम् ।
सुकृतसोदरकौसुमसौरभ
युगपदन्तिकवर्ति विदूरगम् ॥

आकाशः :– विभु च विष्णुपदं ध्वनिसम्पदां
पदमुपाधिकृतान्तरसंभवम् ।
दशदिशामिव भास्वरमण्डलं
युगपदन्तिकवर्ति विदूरगम् ॥

दीपशिखा :– कृतपदं च निशास्वधिदेहल
कियदहो प्रसृतं सरणावपि ।
लसति दीपशिखाङ्कुरजालकं
युगपदन्तिकवर्ति विदूरगम् ॥

मनः :– अवहितं मम सामि पुरस्थिते
मन इदं सहसा शतयोजने ।
स्फुरति सत्वमिवाद्भुतवैद्युतं
युगपदन्तिकवर्ति विदूरगम् ॥

आकाशवाणी :– यदपवारितकोष्ठविजृंभितं
पवनजालपृथक्कृतरूपकम् ।
श्रुतिसुखं जनितं जनभाषितं
युगपदन्तिकवर्ति विदूरगम् ॥

---

1. ईशावास्ये तन्नैजति तद्दूरे तद्वन्तिके ।
2. मुण्डके – बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति । दूरात्सुदूरे तदिहान्तिके च ...... गीता – सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ।



## LESSON 1

अक्षराणि

### Alphabets

"अकारादिक्षकारान्तवर्णावयवशालिनी ।
वीणापुस्तकहस्ताऽव्यात्प्रणो देवी सरस्वती ॥

[The above is a verse in the 'Tripurasundarivedapadastava of Adi Sankaracharya. In this verse Sankara makes invocation to Sarasvati the Goddess of Learning, describing the Devi as having for limbs, the letters 'A' to 'Ksha' (अ–क्ष) and as having the Veena and book in Her hands.]

The word 'अक्षर' (Akshara) means the alphabets commencing with अ ('a') and ending with क्ष (ksha). The number of vowels and the consonants, as per the time-old reckoning are 54 (according to some) and 51 (according to some others). But for all practical purposes, in literature 49 letters are in use.

### Vowels

There are 15 vowels.

They are :

अ, आ, इ, ई, उ, ऊ,

ऋ, ॠ, ऌ, ए, ऐ,

ओ, औ, अं, अः ।

It may be noted that in Sanskrit, there are 3 vowels– ऋ, ॠ, and ऌ which are not generally found among letters of other languages, and that there are no short-sounding letters for ए (e) and ओ (o) as found in some of our Indian languages like Tamil. अं (am) and अः (h) are also two extras, the former being called 'anusvara' and the latter as 'Visarga'. Visarga generally comes off at the end of words, particularly at the ending sound in nouns.

## Consonants

A consonant according to lexicons is an 'alphabetical sound element other than vowel, a sound that in forming a syllable is combined with a vowel'.

Below are given the letters which indicate the consonant sounds with almost corresponding sound indicating letters in English and other languages.

| | | | | |
|---|---|---|---|---|
| *k* क् | *kh* ख् | *g* ग् | *gh* घ् | *ṅ* ङ् |
| *ch* च् | *chh* छ् | *j* ज् | *jh* झ् | *ñ* ञ् |
| *ṭ* ट् | *ṭh* ठ् | *ḍ* ड् | *ḍh* ढ् | *ṇ* ण् |
| *t* त् | *th* थ् | *d* द् | *dh* ध् | *n* न् |




Please find below the signs of vowels that are to be added to the above sounds in the formation of the forms of all consonants cum vowel forms (full consonant syllable formations).




NOTE: The signs (the long) आ, ई, ओ and औ are added after the consonant (as का, की को, कौ), while the signs of उ, ऊ, ऋ, ॠ, ऌ are added under the straight line

in the consonant sounds, the signs of ए and ऐ are added just above the straight line on the head of the letters, and the sign of इ is added before the consonant.

The formations of the (full) consonants enabling the making up of syllables will be dealt with in the next lesson.

**Exercise : (1) Practise writing the vowels and consonant sounds properly as many times as possible along with oral pronouncing.**

[N.B.: Here below are given the spelling (with certain signs) in English denoting each vowel. These will be used in lessons hereafter. These may be steadfastly borne in mind while studying future lessons and for use in doing the exercise - whenever necessary. Tamil equivalents are also given within brackets. For consonants similar table will be given in the next lesson.]

अ—a, (அ) आ—*ā*, (ஆ) इ—i, (இ) ई—*ī*, (ஈ) उ—u, (உ)

ऊ—*ū*, (ஊ) ऋ—r, (ரு) ॠ—r̄, (ரூ) ऌ—*ḷ*, (லு) ए—e, (ஏ)

ओ—o, (ஓ) औ—au (ஔ) अं—am, (அம்) अः—*ḥ*, (அ:).

---

வரப்பெற்ருேம்

## பாண்டவ கீதை

*[பிரசுரித்தவர்—V. ஆம்ரவனேச்வரன், 161, மேலப்புலிவார் ரோடு, திருச்சிராப்பள்ளி-2].*

*'கீதை' என்று சொன்ஞல் குருக்ஷேத்ரப் போர்க்களத்தில், கலக்கமடைந்த அர்ஜுனனுக்கு பகவான் கிருஷ்ணன் உபதேசித்த ஸகல உபநிடதங்களின் ஸாரமான மோக்ஷமார்க்க உபதேசமான பகவத் கீதையைத்தான் குறிக்கும். ஆனுல் பிற்காலத்தில் சிறந்த ஞானப்ரதமான சிவகீதை போன்ற பல நூல்களுக்கு 'கீதை' என்ற பெயர் ஏற்பட்டுள்ளது. இவ்வரிசையில் 'பாண்டவகீதை' ஒரு சேர்க்கை.*

*80 ச்லோகங்களைக் கொண்ட சிறு நூல் 'பாண்டவ உவாச' என்று தொடங்குவதாலும், 'பாண்டவக்ருத ப்ரபன்னகீதா' என்று முடிவதாலும் இதற்கு 'பாண்டவகீதா' எனப் பெயர் ஏற்பட்டிருக்கின்றது போலும். இது பக்திப்ரதமான நூல். விஷ்ணு பக்தியை, அதிலும் க்ருஷ்ணபக்தியின் பெருமையை, வ்யாஸர், சுகர், நாரதர், ஜமதக்னி, மார்க்கண்டேயர் போன்ற மஹா முனிவர்களின் வாக்குகள் மூலம் வெளிப்படுத்தும் ச்லோகங்களும், மற்றும் பாண்டவர்கள் முதலியோரின் ஹரிபக்தி ஸூக்திகளும் இதிலடங்கியுள்ளன.*

*நல்ல முறையில் அச்சிடப்பட்டு, முகப்பட்டையில் குருவாயூர் ஸ்ரீ கிருஷ்ணனின் திவ்யமூர்த்தியின் படத்துடனும், ஸ்ரீ காஞ்சி காமகோடி பீடாதிபதி ஜகத்குரு ஸ்ரீ சங்கராசார்ய ஸ்வாமிகளின் ஸ்ரீமுகத்துடனும் கூடிய இச் சிறு பக்திப்ரதமான நூல் விலையில்லா மாணிக்கம். யாவரும் படித்துப் பயனடைவார்களாக!*

---